# ॥ देवीस्तवम् ॥

हरिवंशे अनुबन्धम्- अध्याय-८

वैशम्पायन उवाच
आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी ।
जननी सिद्धसेनस्य दुर्गा वीरा महातपाः ॥ १॥

जया च विजया चैव पुष्टिश्च त्वं क्षमा दया ।
ज्येष्ठा यमस्य भगिनी नीलकौशेयवासिनी ॥ २॥

बहुरूपा विरूपा च अनेकविधरूपिणी ।
विरूपाक्षी विशालाक्षी भक्तानां परिरक्षणी ॥ ३॥

पर्वताग्रेषु घोरेषु नदीषु च गुहासु च ।
वासस्तव महादेवि वनेषूपवनेषु च ॥ ४॥

शबरैर्बर्बरैश्चैव पुलिन्दैश्च सुपूजिता ।
मयूरपक्षध्वजिनी लोकान् क्रामसि सर्वशः ॥ ५॥

कुक्कुटैश्छागलैर्मेषैः सिंहैर्व्याघ्रैः समाकुला ।
घण्टानिनादबहुला विश्रुता विन्ध्यवासिनी ॥ ६॥

त्रिशूलपट्टिसधरा सूर्यचन्द्रपताकिनी ।
नवमी कृष्णपक्षस्य शुक्लस्यैकादशी प्रिया ॥ ७ ॥

भगिनी वासुदेवस्य रजनी कलहप्रिया ।
आवासः सर्वभूतानां निष्ठा च परमा गतिः ॥ ८ ॥

नन्दगोपसुता चैव देवानां विजयावहा ।
चीरवासाः सुवासाश्च रौद्री सन्ध्या त्वमेव च ॥ ९॥

प्रकीर्णकेशी मृत्युश्च तथा मांसौदनप्रिया ।
लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च ॥ १०॥

सावित्री चापि देवानां माता भूतगणस्य च ।
अन्तर्वेदी च यज्ञानामृत्विजां चैव दक्षिणा ॥ ११॥

सिद्धिः सांयात्रिकाणां च वेला सागरयायिनाम् ।
यक्षाणां प्रथमा यक्षी नागानां सुरसेति च ॥ १२॥

कन्यानां ब्रह्मचर्या च सौभाग्यं प्रमदासु च ।
ब्रह्मवादिन्यथो दीक्षा शोभा च परमा तथा ।
ज्योतिषां त्वं प्रभा देवि नक्षत्राणां च रोहिणी ॥ १३॥

राजद्वारेषु तीर्थेषु नदीनां सङ्गमेषु च ।
पूर्णे च पूर्णिमाचन्द्रे कृत्तिवासा इति स्मृता ॥ १४॥

सरस्वती च वाल्मीकेः स्मृतिर्द्वैपायने तथा ।
सुरदेवी च भूतेषु स्तूयसे त्वं स्वकर्मभिः ॥ १५॥

इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनेति च ।
ऋषीणां धर्मबुद्धिस्तु देवानामदितिस्तथा ॥ १६॥

कर्षकानां च सीतेति भूतानां धरणीति च ।
तापसानां च देवी त्वमरणी चाग्निहोत्रिणाम् ॥ १७॥

क्षुधा च सर्वभूतानां तृप्तिस्त्वं च दिवौकसाम् ।
स्वाहा तुष्टिर्धृतिर्मेधा वसूनां त्वं वसूमती ॥ १८॥

आशा त्वं मानुषाणां तु तुष्टिश्च कृतकर्मणाम् ।
दिशश्च विदिशश्चैव तथा ह्यग्निशिखा प्रभा ॥ १९॥

शकुनी पूतना च त्वं रेवती च सुदारुणा ।
निद्रा च सर्वभूतानां मोहनी क्षत्रिया तथा ॥ २०॥

विद्यानां ब्रह्मविद्या त्वमोङ्कारोऽस्थ वषट् तथा ।
नारीणां पार्वती च त्वं पौराणीमृषयो विदुः ॥ २१॥

अरुन्धत्येकभर्तॄणां प्रजापतिवचो यथा ।
भेदो विवादशीलानं त्वमिन्द्राणीति विश्रुता ।
पर्यायनामभिर्दिव्यैरिन्द्राणी चेति विश्रुता ॥ २२॥

त्वया व्याप्तमिदं सर्वं जगत् स्थावरजङ्गमम् ।
सङ्ग्रामेषु च सर्वेषु अग्निप्रज्वलितेषु च ॥ २३ ॥

नदीतीरेषु घोरेषु कान्तारेषु भयेषु च ।
प्रवासे राजबन्धे च शत्रूणां च प्रमर्दने ॥ २४ ॥

प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः ।
त्वयि मे हृदयं देवि त्वयि बुद्धिर्मनस्त्वयि ॥ २५॥
रक्ष मां सर्वपापेभ्यः प्रसादं च करिष्यसि ।
इमं देव्याः स्तवं दिव्यमितिहाससमन्वितम् ॥ २६॥

यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः ।
त्रिभिश्च काङ्क्षितं मासैः फलं वै सम्प्रयच्छति ॥ २७ ॥

षड्भिर्मासैर्वरिष्ठं तु वरमेकं प्रयच्छति ।
षण्मासान् पठते यस्तु काङ्क्षितं च लभेत सः ।
अर्चिता नवभिर्मासैर्दिव्यं चक्षुः प्रयच्छति ॥ २८ ॥

संवत्सरेण सिद्धिं तु यथाकामं प्रयच्छति ।
सत्यं च ब्रह्मचर्यं च द्वैपायनवचो यथा ॥ २९ ॥

इति हरिवंशानुबन्धं अन्तर्गतं देवीस्तवं सम्पूर्णम् ॥